# ॥ श्रीपीताम्बराष्टोत्तरशतनामस्तोत्रम् ॥

श्रीगणेशाय नमः ।
श्रीभगवान उवाच ।
इतीदं नामसाहस्रं ब्रह्मन्स्ते गदितं मया ।
नाम्नामष्टोत्तरशतं शृणुष्व गदितं मम ॥ १॥

ॐ पीताम्बरा शूलहस्ता वज्रा वज्रशरीरिणी ।
तुष्टिपुष्टिकरी शान्तिर्ब्रह्माणी ब्रह्मवादिनी ॥ २॥

सर्वालोकननेत्रा च सर्वरोगहरापि च ।
मङ्गला मङ्गलास्नाता निष्कलङ्का निराकुला ॥ ३॥

विश्वेश्वरी विश्वमाता ललिता ललिताकृतिः ।
सदाशिवैकग्रहणी चण्डिका चण्डविक्रमा ॥ ४॥

सर्वदेवमयी साक्षात्सर्वागमनिरूपिता ।
ब्रह्मेशविष्णुनमिता सर्वकल्याणकारिणी ॥ ५॥

योगमार्गपरायोगीयौगिध्येयपदाम्बुजा ।
योगेन्द्रा योगिनीपूज्या योगसूर्याङ्गनन्दिनी ॥ ६॥

इन्द्रादिदेवतावृन्दस्तूयमानात्मवैभवा ।
विशुद्धिदा भयहरा भक्तद्वेषीक्षयङ्करी ॥ ७॥

भवपाशविनिर्मुक्ता भेरुण्डा भैरवार्चिता ।
बलभद्रप्रियाकाराहालामदरसोधृता ॥ ८॥

पञ्चभूतशरीरस्था पञ्चकोशप्रपञ्चहृत् ।
सिंहवाहा मनोमोहा मोहपाशनिकृन्तनी ॥ ९॥

मदिरा मदिरोन्मादमुद्रा मुद्गरधारिणी ।
सावित्री प्रसावित्री च परप्रियविनायका ॥ १०॥

यमदूती पिङ्गनेत्रा वैष्णवी शाङ्करी तथा ।
चन्द्रप्रिया चन्दनस्था चन्दनारण्यवासिनी ॥ ११॥

वदनेन्दुप्रभापूर पूर्णब्रह्माण्डमण्डला ।

गान्धर्वी यक्षशक्तिश्च कैराती राक्षसी तथा ॥ १२॥

पापपर्वतदम्भोलिर्भयध्वान्तप्रभाकरा ।
सृष्टिस्थित्युपसंहारकारिणि कनकप्रभा ॥ १३॥

लोकानां देवतानाञ्च योषितां हितकारिणी ।
ब्रह्मानन्दैकरसिका महाविद्या बलोन्नता ॥ १४॥

महातेजोवती सूक्ष्मा महेन्द्रपरिपूजिता ।
परापरवती प्राणा त्रैलोक्याकर्षकारिणी ॥ १५॥

किरीटाङ्गदकेयूरमाला मञ्जिरभूषिता ।
सुवर्णमालासञ्जप्ताहरिद्रास्रक् निषेविता ॥ १६॥

उग्रविघ्नप्रशमनी दारिद्र्यद्रुमभञ्जिनी ।
राजचोरनृपव्यालभूतप्रेतभयापहा ॥ १७॥

स्तम्भिनी परसैन्यानां मोहिनी परयोषिताम् ।
त्रासिनी सर्वदुष्टानां ग्रासिनी दैत्यराक्षसाम् ॥ १८॥

आकर्षिणी नरेन्द्राणां वशिनी पृथिवीमृताम् ।
मारिणी मदमत्तानां द्वेषिणी द्विषितां बलात् ॥ १९॥

क्षोभिणि शत्रुसङ्घानां रोधिनी शस्त्रपाणिनाम् ।
भ्रामिणी गिरिकूटानां राज्ञां विजय वर्द्धिनी ॥ २०॥

ह्लीं कार बीज सञ्जाप्ता ह्लीं कार परिभूषिता ।
बगला बगलावक्त्रा प्रणवाङ्कुर मातृका ॥ २१॥

प्रत्यक्ष देवता दिव्या कलौ कल्पद्रुमोपमा ।
कीर्तकल्याण कान्तीनां कलानां च कुलालया ॥ २२॥

सर्व मन्त्रैक निलया सर्वसाम्राज्य शालिनी ।
चतुःषष्ठी महामन्त्र प्रतिवर्ण निरूपिता ॥ २३॥

स्मरणा देव सर्वेषां दुःखपाश निकृन्तिनी ।
महाप्रलय सङ्घात सङ्कटद्रुम भेदिनी ॥ २४॥

इतिते कथितं ब्रह्मन्नामसाहस्रमुत्तमम् ।
अष्टोत्तरशतं चापि नाम्नामन्ते निरूपितम् ॥ २५॥

काश्मीर केरल प्रोक्तं सम्प्रदायानुसारतः ।
नामानिजगदम्बायाः पठस्वकमलासन ॥ २६॥

तेनेमौदानवौवीरौस्तब्ध शक्ति भविष्यतः ।
नानयोर्विद्यते ब्रह्मनूभयं विद्या प्रभावतः ॥ २७॥

ईश्वर उवाच ।
इत्युक्तः सतदाब्रह्मा पठन्नामसहस्रकम् ।
स्तम्भयामास सहसा तयीः शक्तिपराक्रमात् ॥ २८॥

इतिते कथितं देवि नामसाहस्रमुत्तमम् ।
परं ब्रह्मास्त्र विद्याया भुक्ति मुक्ति फलप्रदम् ॥ २९॥

यः पठेत्पाठयेद्वापि शृणोति श्रावयेदिदम् ।
स सर्वसिद्धि सम्प्राप्य स्तम्भयेदखिलं जगत् ॥ ३०॥

इति मे विष्णुना प्रोक्तं महास्तम्भकरं परम् ।
धनधान्य गजाश्वादि साधकं राज्यदायकम् ॥ ३१॥

प्रातःकाले च मध्याह्ने सन्ध्याकाले च पार्वति ।
एकचित्तः पठेदेतत्सर्वसिद्धिं च विन्दति ॥ ३२॥

पठनादेकवारस्य सर्वपापक्षयो भवेत् ।
वारद्वयस्य पठनाद्गणेश सदृशो भवेत् ॥ ३३॥

त्रिवारं पठनादस्य सर्वसिद्ध्यति नान्यथा ।
स्तवस्यास्य प्रभावेण जीवन्मुक्तो भवेन्नरः ॥ ३४॥

मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां वश्यार्थी वशयेज्जगत् ॥ ३५॥

महीपतिर्वत्सरस्य पाठाच्छत्रुक्षयो भवेत् ।
पृथ्वीपतिर्वशस्तस्य वत्सरात्स्मरसुन्दरः ॥ ३६॥

य पठेत्सर्वदा भक्त्या श्रीयुक्तो भवति प्रिये ।

गणाध्यक्षः प्रतिनिधिः कविः काव्य इवापरः ॥ ३७॥

गोपनीयं प्रयत्नेन जननीजारवत्प्रिये ।
शक्तियुक्तः पठेन्नित्यं पीताम्बरधरः स्वयम् ॥ ३८॥

य इदं पठते नित्यं शिवेन सदृशो भवेत् ।
धर्मार्थकाममोक्षाणां पतिर्भवति मानवः ॥ ३९॥

सत्यं सत्यं मया देवि रहस्यं सम्प्रकाशितम् ।
स्तवस्यास्य प्रभावेन किं न सिद्ध्यति भूतले ॥ ४०॥

स्तम्भितावास्कराः सर्वे स्तवराजस्य कीर्त्तनात् ।
मधु कैटभ दैतेन्द्रौध्वस्तशक्ति बभूवतुः ॥ ४१॥

इदं सहस्रनामाख्यं स्तोत्रं त्रैलोक्य पावनम् ।
एतत्पठति यो मन्त्री फलं तस्य वदाम्यहम् ॥ ४२॥

राजानो वश्यतां यान्ति यान्ति पापानि संक्षयः ।
गिरयः समतां यान्ति वह्निर्गच्छति शीतताम् ॥ ४३॥

प्रचण्डा सौम्यतां यान्ति शोषयान्त्येव सिन्धवः ।
धनैः कोशा विवर्धते जनैश्च विविधालयाः ॥ ४४॥

मन्दिराः स्करगैः पूर्णा हस्तिशालाश्च हस्तिभिः ।
स्तम्भयेद्विषतां वाचं गतिं शस्त्रं पराक्रमम् ॥ ४५॥

रवेरथं स्तम्भयति सञ्चारं च नभस्वतः ।
किमन्यं बहुनोक्तेन सर्वकार्यकृति क्षयम् ॥ ४६॥

स्तवराजमिदं जप्त्वा न मातुर्गर्भगो भवेत् ।
तेनेष्टाक्रतवः सर्वे दत्तादानपरम्पराः ॥ ४७॥

व्रतानि सर्वाण्यातानियेनायं पठ्यते स्तवः ।
निशीथकाले प्रजपेदेकाकी स्थिर मानसः ॥ ४८॥

पीताम्बरधरी पीतां पीतगन्धानुलेपनाम् ।
सुवर्णरत्नखचितां दिव्य भूषण भूषिताम् ॥ ४९॥

संस्थाप्य वामभागेतु शक्तिं स्वामि परायणाम् ।
तस्य सर्वार्थ सिद्धिःस्याद्यद्यन्मनसि कल्पते ॥ ५०॥

ब्रह्महत्यादि पापानि नश्यन्तेस्यजपादपि ।
सहस्रनाम तन्त्राणां सारमाकृत पार्वति ॥ ५१॥

मया प्रोक्तं रहस्यं ते किमन्य श्रोतुमर्हसि ॥ ५२॥

॥ इति श्रीउत्कट शम्बरे नागेन्द्रप्रयाण तन्त्रे
षोडश साहस्रग्रन्थे विष्णु शङ्कर संवादे
श्रीपीताम्बरा अष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥